अथ

# हनुमत्सहस्रनामस्तोत्रं

प्रारभ्यते ।

# प्रस्तावना.

उमामहेश्वरसंवादरूप, रुद्रयामलतन्त्रान्तर्गत, परमरहस्यमय, तन्त्रशिरोमणि और तत्काल सर्वसिद्धिदायक इस "हनुमत्सहस्रनाम" नामक अलभ्य स्तोत्ररत्नको बडे प्रयाससे प्राप्त तथा अनुभवी विद्वानोंसे परिशोधित कर सहर्ष प्रकाशित करतेहुए आशा करते हैं कि, सर्वसाधारण साधक इसके पाठसे अभिलषितसिद्धि प्राप्त कर हमारे अपार परिश्रमको सफल करेंगे।

सज्जनोंका कृपापात्र–

खेमराज श्रीकृष्णदास.

श्रीरामायनमः ॥ कैलासशिखरेरम्येदेवदेवंमहेश्वरम् ।
ध्यानोपरतमासीनंनंदिभृंगिगणैर्वृतम् ॥ १ ॥ ध्यानांतेच
प्रसन्नास्यमेकांतेसमुपस्थितम् । दृष्ट्वा देवी तदाशंभुंपप्रच्छ
कमलानना ॥ २ ॥ देव्युवाच ॥ शृणु देव प्रवक्ष्यामि
संशयोऽस्ति महान्मम । रुद्रैकादशमाख्यातंपुराहंनचवेद्मि
तम् ॥ ३ ॥ कथयस्वमहाप्राज्ञसर्वतोनिर्णयंशुभम् । यदा
राधनतोलोके भुक्तिमुक्तिफलंभवेत् ॥ ४ ॥ मंत्रंयंत्रंतथा
न्यासंध्यानंच विधिपूजनम् । तत्सर्वंब्रूहिमेनाथकृतार्थाच
भवाम्यहम्॥५॥शिवउवाच॥ शृणुदेविप्रवक्ष्यामिगोप्यंसर्वा
गमेसदा । सर्वस्वंममलोकानांनृणांस्वर्गापवर्गदम् ॥ ६ ॥
दशविष्णुर्द्वादशार्कास्तेचैकादशसंस्मृताः । रुद्रःपरमचण्ड

हनु. श्लोकेस्मिन्भुक्तिमुक्तिदः ॥ ७ ॥ हनुमान्समहादेवः काल
३ कालःसदाशिवः । भक्तिदोमुक्तिकैवल्यभक्तिदःसर्वकामदः
॥ ८ ॥ चिद्रूपीचजगद्रूपस्तथारूपविराटभृत् । रावणस्यव
धार्थायरामस्यचहितायच ॥ ९ ॥ अंजनीगर्भसंभूतोवायुरू
पीसनातनः । यस्यस्मरणमात्रेणसर्वंविघ्नंविनश्यति ॥१०॥
मंत्रंतस्यप्रवक्ष्यामिकामदंसुरदुर्लभम् । नित्यंपरतरंलोके
देवासुरसुदुर्लभम् ॥ ११ ॥ प्रणवंपूर्वमुद्धृत्यकामराजंततो
वदेत् । ॐ नमोभगवतेहनुमतेऽपिततोवदेत् ॥ १२ ॥
सह. ततोवैश्वानरोमायामंत्रराजमिमं प्रिये । एवंबहुतरोमंत्रः
सर्वशास्त्रेषु गोपितः ॥ १३ ॥ येन विज्ञानमात्रेणत्रैलोक्यं
वशमानयेत् । वह्निशैत्यं करोत्येव वातंचस्थिरतां

नयेत् ॥ १४ ॥ विघ्नंचनाशयत्याशुदासवत्स्याज्जगत्त्रयम्।
ध्यानंतस्यप्रवक्ष्यामिहनुर्येन प्रसीदति ॥ १५ ॥ प्रदीप्त
स्वर्णवर्णाभंबालार्कारुणलोचनम् । स्वर्णमेरुविशालांगंशत
सूर्य्यसमप्रभम् ॥१६॥ रक्तांबरधरासीनंसुग्रीवादियुतंतथा।
गोष्पदीकृतवारीशं मशकीकृतराक्षसम् ॥ १७ ॥ पुच्छव
न्तंकपीशंतंमहारुद्रंभयंकरम् । ज्ञानमुद्रालसद्धाहुंसर्वालंकार
भूषितम् ॥ १८ ॥ ध्यानाच्चधारणादेवविघ्नान्मुक्तःसदानरः।
त्रिषुलोकेषुविख्यातःसर्वत्रविजयीभवेत् ॥ १९ ॥ नाम्नां
तस्यसहस्रंतुकथयिष्यामि ते शृणु ॥ यस्यस्मरणमात्रेणवा
दीमूकोभवेद्ध्रुवम् ।२०। स्तंभनंपरसैन्यानांभारणायचवैरि
णाम्॥दारयेच्छाकिनींशीघ्रंडाकिनींप्रेतभूतकान् ॥२१॥ हर

णेधनशत्रूणांकारणंसर्वकर्मणाम् । तारणंसर्वविघ्नानांमोहनंस
र्वयोषिताम् ॥ २२ ॥ धारणंसर्वयोगानांवारणंशीघ्रमापदाम्
॥२३॥ ॐ अस्यश्रीहनुमत्सहस्रनामस्तोत्रमंत्रस्यसदाशिव
ऋषिरनुष्टुप्छंदः । श्रीहनुमान्देवता।ॐह्रींमितिबीजम्।नमइ
तिकीलकम्। स्वाहेतिशक्तिः। समस्तपुरुषार्थसिद्धिद्वारासर्व
मनोरथसिद्ध्यर्थेंजपेविनियोगः । ओंकारनमोरूपमोन्नमो
रूपपालकः।ॐकारमयोंकारकृदोंकारात्मासनातनः ॥२४॥
ब्रह्मब्रह्ममयोब्रह्मज्ञानीब्रह्मस्वरूपवित् । कपीशः कपिनाथश्च
कपिनाथसुपालकः ॥२५॥ कपिनाथप्रियःकालःकपिनाथ
स्यघातकः । कपिनाथःशोकहर्त्ताकपिहर्त्ताकपीश्वरः॥२६॥
कपिजीवनदाताचकपिमूर्तिःकपिर्भृतः । कालात्माकालरू

पीचकालकालस्तुकालभुक् ॥ २७॥ कालज्ञानी कालक
र्ताकालहारीकलानिधिः । कलानिधिप्रियःकर्ताकलानिधि
समप्रभुः ॥ २८॥ कलापीकीशपाताचकीशत्राताकिशां
पतिः । कमलामतिप्रियःकाकुस्वरघ्नःकुलपालकः ॥२९ ॥
कुलभर्ताकुलत्राताकुलाचारपरायणः । काश्यपाह्लादकः
काकध्वंसी कर्मकृतां पतिः ॥ ३० ॥ कृष्णः कृष्ण
स्तुतिः कृष्णरूपी कृष्णमहात्मवान् । कृष्णवेत्ता कृष्ण
भर्ता कपीनः क्रोधवान्कपिः ॥ ३१ ॥ कालरात्रिः कु
बेरश्चकुबेरवनपालकः। कुबेरधनदाताचकौसल्यानंदजीवनः
॥ ३२ ॥ कौशलेशप्रियः केतुः कपालीकामपालकः ।
कारुण्यःकरुणारूपःकरुणानिधिविग्रहः ॥ ३३ ॥ का

हनु. रुण्यकर्त्तादाताचकपिःकाव्यकृतांतकः । कूर्म्मः कूर्म्मपतिः
९ कूर्म्मभर्त्ताकूर्म्मस्यप्रेमवान् ॥ ३४ ॥ कुक्कुटःकुक्कुटाह्वानः
कुंजपःकमलाननः । कुंजरःकलभः केकिनादजित्कल्पजी
वनः ॥ ३५ ॥ कल्पांतवासीकल्पांतत्राताकल्पविबोधकः।
कलभुक्कलहस्तश्चकम्पःकम्पपतिस्तथा ॥ ३६ ॥ कर्मफ
लप्रदःकर्म्मकमनीयःकलापवान् । कमलासनबंधुश्चकमला
सनपूजकः ॥ ३७ ॥ कमलासनसेवीचकमलासनमानितः।
कमलासनप्रियः कंबुः कंबुकंठोऽपि कामधुक् ॥ ३८ ॥
किंजल्करूपीकिंजल्कःकिंजल्कावनिवासकः । खगनाथ
सह. प्रियःखड्गी खगनाथप्रहारकः ॥ ३९ ॥ खगनाथ
सुपूज्यश्चखरध्वंसी खरात्मकः । खरारिप्रियबंधुश्चखरा

रिर्जीवनः सदा । खड्गहस्तःखड्गधरःखड्गहारीचखड्गपः ॥४०॥ खंजरीटप्रियः खंजःखंजत्राताऽतिमूर्तिमान् । खेचरः खेचरत्राता खेचरात्माखरारिजित् ॥ ४१ ॥ खंजरीटपा[illegible]ः पूज्यःखंजरीटेक्षचंचलः । खद्योतबंधुःखद्योतःखद्योतनप्रि यःसदा॥४२॥गरुत्मान्गरुडोगोप्योगरुत्मान्गर्वहारकः । ग र्विष्ठोगर्वहर्त्ताचगर्वहागर्वहारकः।४३।गर्वोगुणप्रियोगाणोगुण सेवीगुणान्वितः।गुणत्राताGुणरतोगुणवंतप्रियोगुणी ॥४४॥ गणेशोगणपाताचगणरूपोगणप्रियः । गणरक्षोगणहरो गुणदोगुणसेवितः ॥ ४५ ॥ गवेशोगवयत्राताग र्जि तेशगणप्रियः।गंभीरोथगुणाकारोगरिमागारिमप्रदः॥४६॥गं धमादनहर्त्ताचगंधमादनपूजकः । गंधमादनसेवीचगंधमाद

नरूपधृक्॥४७॥गुरुर्गुरुप्रियोगौरोगुरुसेव्योगुरून्नतः।गुरुगी
तापरोगीतोगीतविद्यागुरुर्गुरुः ॥ ४८ ॥ गीतप्रियोगीतरतो
गीतज्ञोगीतवानपि । गायत्र्याजापकोगोष्ठोगोष्ठोदेवोऽथगो
ष्ठपः॥४९॥ गोपालोगोपदोगोपोगोपीवल्लभवत्सलः। गोपी
जनप्रियोबन्धोगन्धूपोगंधपूजकः ॥५०॥ गोष्पदीकृतवारी
शोगोविन्दोगोपवंदकः । गोवर्द्धनधरोगर्वोगोवर्द्धनप्रपूजकः
॥ ५१ ॥ गंधर्वोगंधर्वरतोगंधर्वानंदनन्दितः । गंधोगदाधरो
गुप्तोगदापोगुह्यकेश्वरः ।५२। गिरिजापूजकोगीश्चगीर्वाणोगी
ष्पतिस्तथा । गिरिर्गिरिप्रियोगर्वोगर्भपोगर्भत्रासकः॥५३॥
गभस्तिग्रासकोग्रासोग्रासदाताग्रहेश्वरः । ग्रहोग्रहेशरोग्रा
होग्रहदोषविनाशनः ॥ ५४ ॥ ग्रहारूढोग्रहपतिर्ग्रहणोग्रह

णाधिपः । गोलोगव्योगवेष्यश्च गवाक्षोमोक्षदायकः ॥५५॥
गणेगम्योगणेदाता गरुडध्वजवल्लभः । गेहोगेहप्रदो गम्यो
गीतागानपरायणः ॥५६॥ गह्वरो गह्वरत्राणोगर्गोगर्गाश्रम
प्रदः । गंगास्नायीगयानाथोगयापिंडप्रदीपकः ॥ ५७ ॥
गोमतीतीर्थचारीचगोमतीतीर्थपूजकः । गगनेन्द्रोगणत्राताग्र
न्थदोग्रंथकारकः ॥५८॥ घनाङ्गोघातकोघोरोघोररूपीघन
प्रदः । घोरदंष्ट्रोघोरनखोघोरघाती घनेतरः ॥५९॥ घोररा
क्षसघातीचघोरदर्पविनाशनः । घर्म्मो घर्म्मप्रदश्चैवघर्मरू
पीघनाघनः ॥ ६० ॥ घनध्वनिरतोघंघावाद्यप्रियघृणि
र्घनः । घौघोघनस्वनोघूर्णोघूर्मितोपिघनाघनः ॥ ६१ ॥
ङकारोङप्रदोङन्तश्चन्द्रिकामोदमोदकः । चन्द्ररूपश्चन्द्र

हनु. बन्धश्चन्द्रात्माचन्द्रपूजकः ॥ ६२ ॥ चन्द्रप्रेमाचन्द्रबि
७ म्बश्चामरप्रियचञ्चलः । चंद्रवक्त्रश्चकोराक्षश्चंद्रनेत्रश्चतु
र्भुजः ॥ ६३ ॥ चंचलात्मा चलच्चर्म्मा चलत्खं
जनलोचनः । चिद्रूपश्चितयानश्च चलच्चित्तचितार्चितः
॥ ६४ ॥ चिदानंदश्चितश्चैत्रश्चैत्रवंशस्य पालकः ॥ छत्र
श्छत्रप्रदश्छत्रीछत्ररूपीछदांछिदः ॥ ६५ ॥ छल
हाछलदश्छन्नश्छिन्नघाती क्षपाकरः । छद्मरूपी छद्म
हारीछलीछलतरुस्तथा ॥ ६६ ॥ छायाछरद्युतिश्छंदश्छंदो
सह. विद्याविनोदकः । छिन्नारातिश्छिन्नपापश्छंदवारणवाहकः
॥ ६७ ॥ छंदश्छत्रहरः क्षिप्रश्छवनश्छंदपः क्षमी । क्षमा
गारः क्षमाबंधःक्षपापतिप्रपूजकः ॥ ६८ ॥ छलघातीछिद्र

हारीछिद्रान्वेषपालकः । जनोजनार्द्दनोजेताजितारिर्जित संगरः ॥ ६९ ॥ जितमृत्युर्जरातीतोजनार्द्दनप्रियोजयः । जयदोजयकर्त्ताचजयपाताजयप्रियः ॥ ७० ॥ जितेन्द्रियो जितारातिर्जितेंद्रियप्रियोजयी । जगदानंददाताचजगदानं दकारकः ॥ ७१ ॥ जगद्वन्द्योजगज्जीवोजगतामुपकारकः। जगद्धाताजगद्धारीजगद्बीरोजगत्पिता ॥ ७२ ॥ जगत्पति प्रियोजिष्णुर्जिष्णुजिज्जिष्णुरक्षकः । जिष्णुवंद्यो जिष्णु पूज्यो जिष्णुभूतिविभूषितः ॥ ७३ ॥ जिष्णुप्रियो जिष्णुरतोजिष्णुलोकनिवासकः । जयो जयप्रदो जापोजा पकोजपजाड्यहा ॥७४॥ जयप्रियोजनानंदोजनदोजनजी वनः । जयानंदोजपापुष्पवल्लभोजपपूजकः ॥ ७५ ॥ जा

डचहर्त्ताजाडचदाताजाडचकर्त्ताजडप्रियः । जगज्जेताजग
न्नाथोजगदीशोजनेश्वरः ॥७६॥ जगन्मंगलदोजीवोजगत्पा
वनपावनः।जगत्प्राणोजगत्त्राणोजानकीपतिवत्सलः ॥७७॥
जानकीपतिपूज्यश्चजानकीपतिसेवकः । जानकीशोकहारी
चजानकीदुःखभंजनः॥७८॥यजुर्वेदोयजुर्वक्तायजुःपाठप्रिय
व्रती॥जिष्णुर्जिष्णुरतोजिष्णुघातीजिष्णुविनाशकः।७९।जि
ष्णुहाजिष्णुपातातुजिष्णुराक्षसघातकः।यतीनामग्रगःपूज्यो
यतीनांवरदायकः ॥८० ॥ झर्झरोझर्झरवहोझंझावातनिषेवि
तः।झिल्लीरवस्वनोजंतोजवर्णोजनतोयदः ॥८१॥ टकारादिष्ट
कारांतष्टवर्णाष्टप्रपूजकः ।टिट्टिभष्टिट्टिभरतष्टिट्टिभप्रियवत्स
लः ॥८२॥ टकारवर्णनिलयष्टकारार्णस्ववासितः । टकारबीज

निरतष्ठकारप्रियदर्शकः॥८३॥डमरुध्वनिरतोडंकोडकिनी प्राणहारकः । डाकिनीवरदाताच डाकिनीभयनाशकः ॥ ८४॥ डिंडिभध्वनिकर्त्ताचडिंभाडिंभतरेरतः । ढक्काढक्का रवो ढक्कावाद्यढक्कामहोत्सवः ॥ ८५ ॥ णंसोणंतोणव र्णश्चणसेव्योणप्रपूजकः । तंत्रीतंत्रप्रियस्तल्पस्तंत्रजित्तंत्र वादकः॥८६॥तंत्रपूज्यस्तन्त्ररतस्तंत्रविद्याविशारदः। तंत्रमं त्रजपीतंत्रधारकस्तंत्रवाहकः ॥ ८७ ॥ तंत्रवेत्तातंत्रकर्त्तातंत्र यंत्रवरप्रदः।तंत्रदस्तंत्रदाताचतंत्रपस्तंत्रदायकः ॥८८॥ तत्त्व दाताचतत्त्वज्ञस्तत्त्वतत्त्वप्रकाशकः । तन्द्राचतपनस्तल्प स्तलातलनिवासकः॥८९॥तपीतपःप्रियस्तापत्रयघातीतपः पतिः । तपस्वीचतपोज्ञातातपसामुपकारकः ॥९०॥तपीत

हनु. पोव्रतस्तापोतापदस्तापहारकः । तपःसिद्धिस्तपारिद्धिस्त
९ पोनिधितपःप्रभुः ॥ ९१ ॥ तीर्थस्तीर्थरतस्तीव्रतीर्थवासीतु
तीर्थदः।तीर्थपस्तीर्थपस्तीर्थस्वामीतीर्थाऽविरोधकः॥ ९२ ॥
तीर्थसेवीतीर्थपतिस्तीर्थव्रतपरायणः । त्रिदोषहात्रिनेत्रश्चत्रि
नेत्रप्रियपालकः॥९३॥त्रिनेत्रप्रियदासश्चत्रिनेत्रप्रियपूजकः।
त्रिविक्रमस्त्रिपादूर्द्धस्तरणिस्तारणिस्तमः ॥९४॥ तमोरूपी
तमोध्वंसीतमसस्तमघातकः । तमोघ्नस्तामसस्तप्तस्तमोमा
लीतमोन्तकः ॥९५॥ तमहस्तमकृत्ताघ्नस्ताघ्रौषधगणप्रदः ।
तैजसस्तेजसांमूर्तिस्तेजसःप्रतिपालकः ॥ ९६ ॥ तरुण
हस. स्तर्कविद्याचतर्कशास्त्रविशारदः । तिमिंगिलस्तत्त्वकर्त्तात
त्त्वदाताचतत्त्ववित् ॥९७॥ तत्त्वदर्शीतत्त्वगामीतत्त्वभुक्त

स्ववाहकः । त्रिदिवस्त्रिदिवेशश्चत्रिकालश्चतमिस्रहा ॥९८॥
स्थाणुःस्थाणुप्रियस्थाणुःसर्वतोपिचवासकः । दयासिंधुर्द
यारूपोदयानिधिदयापरः ॥ ९ ॥ दयामूर्तिर्दयादातादया
दानपरायणः॥१००॥देवेशोदेवदोदेवोदेवराजाधिपालकः ।
दीनबंधुर्दीनदातादीनोद्धरणदिव्यदृक्॥१॥ दिव्यदेहोदिव्य
रूपोदिव्यासननिवासकः।दीर्घकेशोदीर्घपुच्छोदीर्घसूत्रोऽपि
दीर्घभुक् ॥२॥ दीर्घदर्शीदूरदर्शीदीर्घबाहुस्तुदीर्घपात्। दान
वारिर्दारिद्रारिर्दैत्यारिर्दुःखभंजनः ॥ ३ ॥ दंष्ट्रीदण्डादण्ड
धरोदण्डोदण्डप्रदायकः ॥ दामोदरप्रियोदत्तात्रेयपूजनत
त्परः ॥ ४ ॥ दर्वीदलपतिर्दद्रुर्दद्रुरोगविनाशकः । धर्म्मो
धर्म्माधिपोधर्म्मीधर्म्मशास्त्रपरायणः ॥ ५ ॥ धर्म्मात्माध

हनु.
१०

मनेताचधर्मधुक्धर्मधारकः । धर्मध्वजोधर्ममूर्तिर्धर्म्मराज
स्यत्रासकः ॥६॥ ध्याताध्येयोधनोधन्योधनदोधनपोधनी
धनदत्राणकर्त्ताचधनपप्रतिपालकः ॥७॥ धरणीधरप्रियो
धन्वीधनुष्मान्धनुधारकः । धन्वी सवत्सलो धीरोधाता
मोदप्रदायकः ॥ ८ ॥ धात्रेशवरदाताचधात्रेशप्रतिपूजकः ।
धात्रात्माचधरानाथोधरानाथप्रबोधकः॥ ९॥ धर्म्मिष्ठोधर्म
केतुश्चधवलाधवलप्रियः । धवलाचलवासीचधेनुदोधेनुपो
धनी॥१०॥ध्वनिरूपोध्वनिप्राणोध्वनिधर्मप्रमोदकः।धर्मा
सह. ध्यक्षोर्ध्वजोधूमोधत्तूरोधीवरोधवः ।११। नारायणोनरोनेता
नदीशोनरवानरः।नदीसंक्रमणो नाट्योनाट्यवेत्तानटप्रियः
॥१२॥ नारायणात्मकोनंदीनंदिभृंगिगणाधिपः।नंदिकेश्वर

वर्त्माचनंदिकेश्वरपूजकः ॥ १३ ॥ नरसिंहोनखीनर्म्मोन
खयुद्धविशारदः । नखयुद्धोनलोनीलोनलनीलप्रमोदकः
॥ १४ ॥ नवद्वारपुराधारो नवहारनिकेतनः । नरनारायण
स्तुल्योनाकनाथमहेश्वरः ॥ १५ ॥ नखदंष्ट्रायुधोनित्योनि
राकारोनिरंजनः । निष्कलङ्कोनिरवधोनिर्म्मलोनिर्ममोनगः
॥१६॥नगरग्रामपालश्चनिरंतरनगारिपः।नागकन्याभयध्वं
सीनागारिप्रियनागरः ॥१७॥ पीतांबरः पद्मनाभः पुण्डरी
काक्षपावनः।पद्माक्षःपद्मवक्त्रश्चपद्मासनप्रपूजकः॥१८॥ पद्म
मालीपद्मरतःपद्मपूजनतत्परः।पद्मपाणिः पद्मपदःपुण्डरीका
क्षपावनः॥१९॥पावनःपवनात्माचपवनात्मजपापहा।परःप
रतरःपद्मःपरमःपरमात्मकः।१२०।पीतांबरप्रियःप्रेमाप्रेमदः

हनु. ११

प्रेमपालकः । प्रौढःप्रौढतरःप्रेतदोषहाप्रेतनाशकः ॥ २१ ॥
प्रभंजनाऽन्वयःपञ्चपंचाक्षरमनुप्रियः।पन्नगारिःप्रतापीजप्रपं
चपरदोषहा ॥२२॥ पराभिचारशमनः परसैन्यविनाशकः।
प्रतिवादिमुखस्तंभःपुराधारःपुरारिनुत् ॥ २३॥ पराजितः
परब्रह्मपरात्परपरापरः । पातालगःपुराणश्चपुरातनःप्लवंग
मः॥ २४ ॥ पुराणपुरुषःपूज्यः पुरुषार्थप्रपूजकः । प्लवंगेशः
पलाशोऽपिपृथुकःपृथिवीपतिः ॥ २५ ॥ पुण्यशीलः पुण्य
राशिःपुण्यात्मापुण्यपालकः ॥ २६ ॥ पुण्यकीर्तिः पुण्य
गीतिःप्राणदः प्राणपोषकः । प्रवीणश्चप्रसन्नश्चपार्थध्वज
सह. निवासकः ॥ २७ ॥ पिंगकेशः पिंगरोमाप्रणवः पिंगलः
प्रणः । पराशरः पापहर्त्तापिप्पलाश्रयसिद्धिदः ॥ २८ ॥

पुण्यश्लोकः पुरातीतः प्रथमः पुरुषः पुमान्। पुराधारश्च
प्रत्यग्रः परमेष्ठीपितामहः ॥ २९ ॥ फुल्लारविंदवदनःफुल्लत्क
मललोचनः।फूत्कारःफूत्करःफूश्चफूदमंत्रपरायणः॥१३०॥
स्फटिकाद्रिनिवासीचफुल्लेन्दीवरलोचनः । वायुरूपोवायु
सुतोवाय्वात्मावायुनाशकः ॥ ३१ ॥ वनोवनचरोबा
लोबालत्राताताबालकः । विश्वेशोविश्वनाथश्चविश्वात्मा
विश्वपालकः ॥ ३२ ॥ विश्वघातीविश्वकर्त्ताविश्ववेत्ता
विशांपतिः।निर्मलोविमलज्ञानोविमलानंददायकः ॥ ३३॥
विमलोत्पलवक्रश्चविमलात्माविलासकृत्।बिन्दुमाधवपूज्य
श्चबिंदुमाधवसेवकः।३४।बीजोऽथवीर्य्यदोवीर्य्यहारीविजय
दोविभुः । विजयोजयकर्त्ताचविभूतिर्भूतिदायकः ॥३५॥वि

हनु. १२ श्ववेष्टनविश्वगम्योविश्वहर्त्ताविराट्तनुः । बुबुकारहतारा
तिर्वसुदेवोबलप्रदः ॥ ३६ ॥ ब्रह्मपुत्रोब्रह्मपरोवानरोवान
रेश्वरः । बलिबंधनकृद्विश्वतेजोविश्वप्रतिष्ठितः ॥ ३७ ॥
विभोक्ताचवासुदेवोवीरवीरोवसुंधरः । वनमालीबलिध्वंसी
वरुणोवाङ्मयोबली ॥ ३८ ॥ विभीषणप्रियोविष्णुसेवी
वायुगतिर्विदुः । विपाप्मावायुवेगश्चवेदवेदाङ्गपारगः ॥३९॥
बृहत्तनुर्बृहत्पादोबृहत्कायोबृहद्यशाः । बृहन्नासोबृहद्बाहुर्बृह
न्मूर्तिर्बृहत्स्तुतिः ॥ १४० ॥ बृहद्धनुर्बृहच्छब्दोबृहत्कायोबृह
त्करः । बृहद्गतिर्बृहत्पुच्छोबृहल्लोकफलप्रदः ॥ ४१ ॥ बृहत्से
सह- ंयोबृहच्छक्तिर्ब्रह्मविद्याविशारदः । बृहल्लोकरतोविद्वान्
विधाताचविदिक्पतिः ॥४२॥विग्रहोविग्रहरतोव्याधिनाशी

चव्याधिदः ।बलिष्ठोबलदाताचविघ्ननाशोविनायकः॥४३॥
वाराहोवसुधानाथोभगवान्भयभंजनः। भाग्यदोभयहर्त्ताच
भृगोभृगुपतिप्रियः ॥४४॥ भव्योभक्तोभरद्वाजोभवाब्धिभ
यनाशनः । माधवोमथुरानाथोमेघनादोमनोमुनिः ॥४५॥
मायापतिर्मनस्वीचमायातीतोमनोत्सुकः। मैनाकवंदितामो
दो मनोवेगी महेश्वरः ॥ ४६ ॥ मायानिर्जितरक्षश्चमाया
निर्जितविष्टपः ॥ मायाश्रयश्च निलयोमायाविध्वंसको
मयः ॥ ४७ ॥ मनोमयः परोवाग्मीयमदुःखनिवारणः ।
यमुनातीरवासीचयमुनातीर्थचारणः ॥ ४८ ॥ रामोरामप्रि
योरम्योराघवो रघुनंदनः । रामप्रपूजको रुद्रोरुद्रसेवीरमा
पतिः ॥४९॥ रावणारीरमानाथोवत्सलोरघुपुंगवः।रक्षोघ्नो

हनु. रामदूतश्चरामेष्टोराक्षसांतकः ॥ १५० ॥ रामभक्तोरामरूपो
१२ राजराजोरणोत्सुकः । लंकाविध्वंसनोलंकापतिघातीलता
प्रियः॥५१॥ लक्ष्मीनाथप्रियोलक्ष्मीनारायणात्मपालकः ।
लवणब्धिहेलकश्चलंकेशगृहभंजनः ॥ ५२ ॥ ब्रह्मस्वरूपी
ब्रह्मात्माब्रह्मज्ञोब्रह्मपालकः । ब्रह्मचारीविश्वक्षेत्रंविश्वबीजं
चविश्वदृक् ॥ ५३ ॥ विश्वंभरोविश्वमूर्तिर्विश्वाकारोऽथ
विश्वदृक्।विश्वात्माविश्वसेव्योथविश्वोविश्वेश्वरोविधुः।५४॥
शुक्रः शुक्रप्रदःशुभ्रःशुक्रात्माचशुभप्रदः । शर्वरीपतिशूर
श्चशरभश्चश्रुतिश्रवाः ॥५५॥ शाकंभरीशक्तिधरःशत्रुघ्नःशर
सह. णप्रदः । शंकरःशांतिदःशांतःशिवःशूलीमहेश्वरः॥५६॥श्री
रामरूपः श्रीवासःश्रीपदःश्रीकरःशुचिः॥श्रीशःश्रीदःश्रीधर

श्रीकांतः श्रीनिधिः श्रियः ॥५७॥ षोडशस्वरसंयुक्तःषोडशा
त्माप्रियंकरः । षडंगस्तोत्रनिरतः षडाननप्रपूजकः ॥५८॥
षट्शास्त्रवेत्ताषड्बाहुः षट्स्वरूपः षडूर्मयः। सनातनःसत्य
रूपःसत्यलोकप्रबोधकः ॥ ५९ ॥ सत्यात्मासत्यदाताचस
त्यव्रतपरायणः।सौम्यःसौम्यप्रदः सौम्यदृक्सौम्यःसौम्यपा
लकः॥१६०॥सुग्रीवादियुतःसर्वसंसारभयनाशनः।सूत्रात्मा
सूक्ष्मसंघश्चस्थूलःसर्गगतिःपुमान् ॥६१ ॥ सुरभिः सागरः
सेतुः सत्यः सत्यपराक्रमः । सत्यगर्भः सत्यसेतुः सिद्धि
स्तुसत्यगोचरः ॥ ६२ ॥ सत्यवादी सुकर्मा च सदानंदैक
ईश्वरः। सिद्धिःसाध्यःसुसिद्धिश्चसंकल्पःसिद्धिहेतुकः॥६३॥
सप्तपातालचरणः सप्तर्षिगणवंदितः । सप्ताब्धिलंघनो

वीरः सप्तद्वीपोरुमंगलः ॥ ६४ ॥ सप्तांगराज्यसुखदः सप्त
मातृनिषेवितः । सप्तच्छंदोनिधिः सप्तच्छंदःसप्तजनाश्रयः
॥ ६५ ॥ सप्तस्वर्लोकमुकुटः सप्तपातालसंश्रयः । संकर्षणः
सहस्रास्यः सहस्राक्षः सहस्रपात् ॥ ६६ ॥ हनुमान्
हर्षदाता च हरो हरिर्हरीश्वरः । क्षुद्रराक्षसघातीच क्षुद्धरः
क्षांतिदायकः ॥ ६७ ॥ अनादीशोह्यनंतश्च आनंदोध्यात्म
बोधकः । इंद्रईशोत्तमश्चैवउन्मत्तोऋषिसिद्धिदः ॥६८॥ ल
वर्णोलृपदोलूनऐश्वर्यश्चौषधिप्रियः । औषधोह्यंशुमालश्च
अकारःसर्वकारणः ॥ ६९ ॥ इत्येतद्रामदूतस्यनाम्नांचैवसह
स्रकम् ॥ एककालंद्विकालंवात्रिकालंश्रद्धयान्वितः । पठना
त्पाठनाद्वापिसर्वसिद्धिर्भवेत्प्रिये॥१७० मोक्षार्थीलभतेमोक्षं

कामार्थीकाममाप्नुयात्। विद्यार्थीलभतेविद्यांवेदव्याकरणा
दिकम्॥७१॥इच्छाकामांस्तुकामार्थीधर्म्मार्थीधर्ममक्षयम्।
पुत्रार्थीलभतेपुत्रंचिरायुःसहितंपुमान् ॥ ७२ ॥ क्षेत्रंचबहु
सस्यंस्याद्गावश्चबहुदुग्धदाः । दुस्वप्नंचनृभिर्दृष्टंसुस्वप्नमुप
जायते॥७३॥दुःखौघोनश्यतेतस्यसंपत्तिर्वर्द्धतेचिरम्। चतु
र्विधंवस्तुतस्यभवत्येवनसंशयः॥७४॥ अश्वत्थमूलेजपतो
नास्तिवैरिकृतंभयम्। त्रिकालपठनात्तस्यसिद्धिःस्यात्करसं
स्थिता ॥ ७५ ॥ अर्द्धरात्रेरवौधृत्वाकंठदेशेनरःशुचिः ।
दशावर्तंपठेन्मर्त्यःसर्वान्कामानवाप्नुयात् ॥ ७६ ॥ निशां
तेभीमन्यग्रोधमूलेस्थित्वाविचक्षणः । दशावर्तंपठेन्मर्त्यः
सार्वभौमःप्रजायते ॥ ७७ ॥ अर्कमूलेऽर्कवारेतुयोमध्याह्नेशु

चिर्जपेत् । स चिरायुः सुखी पुत्री विजयी जायते क्षणात
॥ ७८ ॥ ब्राह्मेमुहूर्त्तेचोत्थायप्रत्यहंप्रपठेन्नरः । यंयंकामयते
कामंलभतेतन्नसंशयः ॥७९॥ संग्रामेसंनिविष्टानांवैरिविद्राव
णंपरम्।डाकिनीभूतप्रेतेषुसर्वग्रहहरंतथा॥१८०॥ज्वरापस्मा
रशमनंगुल्मादिप्लीहवारणम् ।सर्वसौख्यप्रदंस्तोत्रंसर्वसिद्धिप्र
दंतथा ॥१८१॥ सर्वान्कामानवाप्नोतिवायुपुत्रप्रसादतः । इति
श्रीरुद्रयामलेगौरीश्वरसंवादेहनुमत्सहस्रनामस्तोत्रंसंपूर्णम् ।

# पुस्तकें मिलने के स्थान

१) खेमराज श्रीकृष्णदास,
श्रीवेंकटेश्वर स्टीम् प्रेस,
खेमराज श्रीकृष्णदास मार्ग,
खेतवाडी, बम्बई - ४००००४

२) खेमराज श्रीकृष्णदास,
६६, हड़पसर इण्डस्ट्रिअल इस्टेट
पुणे - ४११०१३

३) गंगाविष्णु श्रीकृष्णदास
लक्ष्मीवेंकटेश्वर स्टीम प्रेस,
व बुक डिपो,
अहिल्याबाई चौक, कल्याण
(जि.ठाणे- महाराष्ट्र)

४) खेमराज श्रीकृष्णदास,
चौक - वाराणसी (उ.प्र.)

इति

# हनुमत्सहस्रनामस्तोत्रं

समाप्तम् ।

मुद्रक एवं प्रकाशक:

**खेमराज श्रीकृष्णदास,**

अध्यक्ष : श्रीवेंकटेश्वर प्रेस,

खेमराज श्रीकृष्णदास मार्ग, बम्बई-४०० ००४

KHEMRAJ SHRIKRISHNADASS

